अयं कविरवपरिचयम् आनायि प्रापितः। महिम्ना अतुलैरनुपमैः। अस्य काव्यनिर्माणस्य, तत्त्वं समदायि दत्त प्रबोधितमित्यर्थः॥ ८१॥

क०—भारतमार्तण्डशिष्यवर्यान् प्राच्यचर्याचणान्
वेद्मि बहुविज्ञान् पुष्टिमार्गेऽधुना धन्येऽहं
शीघ्रकव्युपाधिमाननीयान् शब्दव्याख्याशालि-
प्रौढरचनायामद्वितीयानथ मन्येऽद्य।
मञ्जुनाथमातुलानमायवत्सलानपि तान्
जाने नवनिस्तुलान् नियन्यें जातिजन्येऽहं
मर्यादानुसारि-सांप्रदायिरूपपर्यान् सदा
श्रीनन्दकिशोरशास्त्रिवर्यान् बहु मन्येऽद्य॥ ८२॥

('द्वैविध्ये 'तड') नयनिस्तुलान् नीतौ निरुपमान् । वल्लभसंप्रदायप्रसिद्धा या मर्यादा धार्मिकपद्धतिस्तदनुसारिणी सपर्या सेवा येषां तान् । तथा च मथुरायां 'श्रीनाथजीकी बैठक' इति प्रसिद्धं श्रीनाथमन्दिरं, तत्रत्या सेवा चानेन सूच्यते । इमेऽपि विंशतिपरिमितान्यवधानानि चक्रुः । तत्कालं समस्यादिपूर्त्या 'शीघ्रकविः' इत्युपाधिमिमे प्रत्यक्षयन्ति ॥ ८२ ॥

सो०—तत्साहाय्यमवाप्य, विद्यायामिव बहुविधे ।
व्यवहारेऽप्ययमाप, लब्धुं परिचयमवसरम् ॥ ८३ ॥

तेषां नन्दकिशोरशास्त्रिणां साहाय्यं प्राप्य, विद्यायामिव बहुविधे व्यवहारेपि परिचयं लब्धुमवसरं प्रापेति योजना ॥ ८३ ॥

दो०—भाग्यं बुद्धिमथावसरमासाद्य प्रयतेन ।
शनैः शनैः खण्डितमहो ऋणजालं तदनेन ॥ ८४ ॥

अवसरं अनुकूलं कालम् । प्रयतेन प्रयत्नतत्परेण । तद् ऋणजालम्, अनेन (मथुरानाथेन) खण्डितम् समापितम् ॥ ८४ ॥

मातुलादिसंबन्धिनामन्येषां च ऋणानि ।
पितामहानुग्रहवशात्सर्वाण्यपि दलितानि ॥ ८५ ॥
यथाक्रमं निजमतिबलादायसमृद्धिरकारि ।
स्वजनेष्वथ कोविदगणे गौरवमपि समचारि ॥ ८६ ॥

आयस्य समृद्धिः कृता । स्वजनेषु जातिसमाजे, कोविदगणे विद्वन्मण्डले च, गौरवं प्रतिष्ठा समचारि स्थापिता ॥ ८६ ॥

पारम्परिकं जीर्णगृहमामूलान्निरमायि ।
परःसहस्रै रूप्यकैरन्यद् गृहमक्रायि ॥ ८७ ॥

अन्यद् 'नागरपाडास्थं गृहम्' क्रीतम् ॥ ८७ ॥

एवं शर्मकरात्मपद-गौरवगुणोचितानि ।
साधनानि सर्वाण्यहो सम्यक् संघटितानि ॥ ८८ ॥

आत्मनः स्थानस्य, प्रतिष्ठायाश्चोचितानि । संघटितानि आयोजितानि ॥८८॥

सम्प्रति गुणगौरवविदो विज्ञाः स्नेहमयन्ति ।
उच्चराजकीया जना विनयाद्वरिवस्यन्ति ॥ ८९ ॥

राजकीया उच्चपदाधिकारिणः । वरिवस्यन्ति सत्कुर्वन्ति ॥ ८९ ॥

कुटिलोपि च बहिरभिनयन्विनयं संमुखमेति ।
ध्रुवमिदमनुकूले विधौ सर्वं सहजमुदेति ॥ ९० ॥

अन्तः कुटिलोपि बहिर्विनयमभिनयन् नाटयन्संमुखमेति । अनेन विधे-रानुकूल्यं सूच्यते ॥ ९० ॥

सहृदयसुजनसहायतामाप्य मतिं स दधार ।
नवहिन्दीसाहित्यवरविद्यालयं बभार ॥ ९१ ॥

आ-आप्य, आङ्पूर्वकादाप्नोतेर्ल्यप्। नवहिन्दीसाहित्य०—'हिन्दीसाहित्यराग्निपाठशाला'नामको हिन्दीविद्यालय आलुविद्यालयस्य समीप एव वर्त्तते । अत्र हि हिन्दीसाहित्यसम्मेलनतो नियमितानां 'प्रथमा-मध्यमा-उत्तमा-'परीक्षाणां ग्रन्था नियमानुसारं पाठ्यन्ते । दशाधिका अध्यापका अत्र प्रेम्णाऽध्यापयन्ति । तेषु बहव एवावैतनिकाः । पर्यंद्रराजपपुरराज्यतोऽस्य शिक्षाविभागद्वारा चत्वारिंशन्मुद्राः प्रतिमाससमार्थिकसाहाय्यं लभ्यम् । एतद्ग्रन्थकर्त्रा परिचालितेन 'कविमण्डलेन' सोप विद्यालयः पूर्वं प्रतिष्ठापित इति दिक् ॥ ९१ ॥

सो०–प्राकृतलोकसुखाय, यस्य रसपाकोऽभवत् ।
संस्कृतपद्यं निनाय, गाथासप्तशतीं स ताम् ॥ ९२ ॥

प्राकृतभाषानुरागिणां लोकानां सुखाय यस्य रसपाकोऽभवत् हालकृतां गाथासप्तशतीं संस्कृतपद्यं संस्कृतभाषायाः मार्गं प्रापयामास । तत्संस्कृतानुवादेन तां संस्कृतज्ञानां कामिनीं चकार इति भावः । अत्र प्राकृतानां गाथारूपाणां रचनानां रसनीयां सप्तशतीं, संस्कृतरसिकानां नागरिकाणामुपभोग्यां

चक्रे इदमपि शब्दशक्त्या सूच्यते, तेन च संस्कृतभाषाया अपूर्वोत्कर्षदायकत्वमभिव्यज्यते ॥ ९२ ॥

स हि संस्कृतभाषागहनतत्त्वाविष्करणाय ।
यद्यत् किञ्चन चरति तद्विदितं स्यादक्षाय ॥ ९३ ॥
अथवा कृतवान् किं न किं, ? करुणां योऽधिजगाम ।
मण्डनकुलतन्तुः स किल जगन्नियन्तुर्नाम ॥ ९४ ॥

यो मण्डनकुलतन्तुः जगन्नियन्तुः करुणामधिजगाम, स किं किं वा न कृतवानिति योजना । तद्विस्तरस्त्वग्रे ॥ ९४ ॥

क०—पञ्चनदविश्वविद्यापीठे सर्वमूर्द्धपदं
चरमपरीक्षार्थिषु सोयं समवाप्तवान्
जयपुरराजकीयशिक्षाप्रविभागादथो
व्याकरणे शास्त्रिपदमेष परिलब्धवान् ।
साहित्येपि लेभे क्रमादेष किलाचार्यपदं
रत्नाकरमुत्प्रमदं सोयं संग्रथितवान्
शास्त्रमर्म शीलितवान्, वाग्मिनः प्रकीलितवान्,
वाचमथोन्मीलितवान्, किं वा न कलितवान् ९५

पञ्चनदविश्वविद्यालये चरमपरीक्षार्थिषु ( शास्त्रिपरीक्षार्थिषु ) सर्वप्रथमस्थानम् ( First in whole University )। 'संस्कृतरत्नाकर'नामकं संस्कृतमासिकपत्रं महामहोपाध्याय पं. गिरिधरशर्मचतुर्वेदेन एतद्ग्रन्थकर्त्रा चोभाभ्यां दशवर्षपर्यन्तं सम्यक् संपाद्यते स्म जयपुरात् । तदिदानीं कतिपयवर्षेभ्यः प्रतिरुद्धम् । उत्प्रमदं यथा स्यात्तथा प्रकाशितवान् । वाचं कवितामयीं वाणीं प्रकटितवान् ॥ ९५ ॥

दो०—राजाङ्गलविद्यालयाध्यापकपदमयमाप्य ।
माद्यति मानमहीपतेश्छत्रच्छायमवाप्य ॥ ९६ ॥

जयपुरराजकीय'महाराजास् कॉलेज' इत्यस्य संस्कृतप्रोफेसरपदम् । आ आप्य । छत्रस्य छाया इति छत्रच्छायम् 'विभाषा सेनासुरेति' क्लीबत्वम् । माद्यति, संतोषेण प्रसीदति । 'मौज' इति भाषायाम् ॥ ९६ ॥

यः किल मण्डनकुलगृहं व्यभजद्विलसद्वृत्ति ।
मञ्जुनाथनामा सपदि सोयं संमुखमस्ति ॥ ९७ ॥

विलसन् हृद्यो यस्मिन् तत्, ईदृशं मण्डनकुलगृहमाश्रयत् । अनेन मण्डनकवीन्द्रस्य तादृङ्महिमशालित्वमात्मनश्च तत्स्थाने स्थितस्यापि अताद्दशत्वं सूच्यते ॥ ९७ ॥

कविजनरङ्गान्निर्भरं मनस्तरङ्गाद्वापि ।
अपटु ग्रथितं यत्किमपि, तद्वोऽभिमुखमवापि ॥ ९८ ॥

कविजनानां रङ्गात् अनुरागजनितादभ्यासात् । अपटु अप्रौढमसुन्दरमिति यावत् । ग्रथितं यथाकथञ्चिद् गुम्फितम् ( गाठना इति भाषायाम् । अनेनात्मनोऽशक्तिं प्रकाश्य विनयः सूच्यते । ) वः युष्माकम् । अवापि प्रापितम् ॥ ९८ ॥

मध्यममुत्तममधममिति सन्तस्तद्विमृशन्तु ।
मनोमात्रवेद्येष्वपि च के वाचं नटयन्तु ॥ ९९ ॥

विमृशन्तु समीक्षन्ताम् । मानसमात्रैकवेद्येषु कवित्वगुणपरीक्षादिषु विषयेष्वपि, वाचं के नर्टी कुर्वन्तु ? यः विषयः मन एव बोद्धुं पारयेत्तत्र वाचा कथनेन किं गौरवमिति भावः । 'न हि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते' ॥ ९९ ॥

सत्सु किमहमाम्रेडये गिरं कालिदासस्य ? ।
'वह्नौ सिध्यति शुद्धता श्यामिकापि कनकस्य' ॥१००॥

आम्रेडये द्विवारमावर्तयामि । 'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा' ॥ १०० ॥

समाप्त ।

गृहा नानीहमानस्य न चैवावदतो मृषा।
न चानिक्षिप्तदण्डस्य परेषामनिकुर्वतः॥ १३

महाकविकालिदासविरचितं

# कुमारसंभवम्

श्रीमानन्ददेवायनिवल्लभदेवविरचितया
पञ्जिकया समेतम्

संपादकः

डॉ. गौतम पटेल